# संस्कृत-वार्ता:

दिनाङ्क: 07-12-2020

प्रात: - 06: 55

<u>मुख्य-वार्ता:</u>

- प्रधानमन्त्री नरेन्द्रमोदी अद्य आगरामेट्रो निर्माणका-र्यस्य सार्धएकादशवादने- दृश्यश्रव्यप्रणाल्या शुभारम्भं विधास्यति।
- अद्य केन्द्रशासिते प्रदेशे जम्मूकश्मीरे जिलाविकासपरिषद निर्वाचनानां चतुर्थचरणे मतदानं :आयोज्यते। मतदानं प्रात : । द्विवादनं यावत् निश्चितम्वादने प्रारभ्यसप्त
- वाणिज्यच मिलित्वा :लयैआयुषमन्त्रा-उद्योग- इदं निर्णीतं यत् निर्यातते।पनं विधास्यस्था :परिषद-प्रचार-
- कोविड नाइन्टीन् इति वैश्विक संक्रमणं विरुध्य भारतीयप्रवर्धतेतराम् :संघर्ष :, प्रत्यवाप्तिमितित्रि :-सप्त दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता।
- भारतम्-ऑस्ट्रेलिया देशं च अन्तरा प्रचाल्यमाणाया: तिसृणां विंशति-प्रतिविंशति-स्पर्धामालिकाया: ह्य :सिडनी क्रीडांगणे समायोजिता द्वितीया स्पर्धा भारतेन षड् क्रीडकानां सुरक्षापूर्वकं विजिता।

<u>कोविड ओपनिंग</u>

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युध्यति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य संकल्पं स्वीकुर्वन्तु -

मुखावरंक सन्धारयन्तु

सामाजिकदौर्यं परिपालयन्तु,

पाणिपादं च यथासमयं प्रक्षालयन्तु।

प्रधानमन्त्री-आगरा-मेट्रो

प्रधानमन्त्री नरेन्द्रमोदी अद्य आगरामेट्रो निर्माण-कार्यस्य सार्ध-एकादशवादने दृश्यश्रव्यप्रणाल्या शुभारम्भं विधास्यति। चतुर्दशमलव-उत्तर-नवविंशति किलोमीटरमितं मेट्रोमार्गे ताजमहल-आगरा-किला-सिकन्द्राप्रभृतीनि स्थानानि युक्तानि सन्ति।

इदं कार्यं पञ्चभि: वर्षै: सम्पूर्णतां यास्यति अपि चास्य निर्माणमूल्यं नवसप्तति-अधिक-त्रिशतोत्तर-अष्टसहस्रकोटि-रूप्यकाणि अनुमानितं वर्तते।

जम्मूकश्मीर निर्वाचनम्

अद्य केन्द्रशासिते प्रदेशे जम्मूकश्मीरे जिलाविकासपरिषद: निर्वाचनानां चतुर्थचरणे मतदानं भवति। मतदानं प्रात: सप्तवादने प्रारभ्य द्विवादनं यावत् निश्चितम् । अस्मिन् चरणे चतुस्त्रिंशत् निर्वाचनक्षेत्रेषु निर्वाचनानि आयोज्यन्ते। पञ्चाशतपञ्चायत प्रमुखानां कृते उपनिर्वाचनानि अपि च पञ्चायतसदस्यानां उपनिर्वाचनानि अपि अद्य आयोज्यन्ते।

सीबीआई-यूनिटेक

केन्द्रीय-परीक्षण-ब्यूरो(सीबीआई) इति द्वारा यूनिटेक् लिमिटेड् इत्यस्य पूर्व-प्रबन्धन-निदेशकस्य सञ्जयछाबराया: विरुद्धं तस्य पितु: रमेशचन्द्रस्य अग्रजस्य अजयचन्द्रस्य च विरुद्धं कैनरावित्तकोष प्रवञ्चनाप्रकरणे प्रकरणम् उल्लिखितम् ।

आयुष-निर्यातम्

वाणिज्य-उद्योग-आयुषमन्त्रालयै: च मिलित्वा इदं निर्णीतं यत् निर्यात-प्रचार-परिषद: स्थापनं विधास्यते। अस्य परिषद: मुख्यं कार्यं आयुषनिर्यातस्य प्रचार: इति भविष्यति। सममेव सर्वै: इदमपि निश्चितं यत् सम्पूर्ण-आयुषक्षेत्रं मिलित्वा मूल्य-उत्पादनगुणवत्ताश्चेति विषयो निर्यातवर्धनाय कार्यं विधास्यति।

आसाम-बीटीसी-निर्वाचनम्

आसामे बोडोलैण्डक्षेत्रीय परिषद: प्रथमचरणस्य निर्वाचनानि अद्य आयोज्यन्ते। प्रात: सार्धसप्तवादने मतदानं प्रारभते। अस्मिन् प्रथमे चरणे उदालगुड्या: वक्सायाश्च जिलयो: एकविंशति: आसनेषु निर्वाचनानि आयोज्यन्ते।

## कोविड

कोविड नाइन्टीन् इति वैश्विक संक्रमणं विरुध्य भारतीय: संघर्ष: प्रवर्धतेतराम्। भारते अनारतं प्रत्यवाप्तिमितौ परिष्कारो जाजायते। देशे संक्रमण-प्रतिरोधी वीराणां प्रयासेन प्रत्यवाप्तिमिति: त्रि सप्त दशमलवोत्तर चतुर्नवति प्रतिशतं यावत् विवर्धिता। विगते अहोरात्रे प्राय: षड्त्रिंशत् सहस्रं नूतन-प्रकरणानि पञ्जीकृतानि। द्विचत्वारिंशत् सहस्रजना: स्वास्थ्यलाभम् अवाप्तवन्त:। द्वयाशित्यधिक चतुर्शतं जना: कालकवलिता: सूच्यन्ते।

## क्रिकेट

भारतम्-ऑस्ट्रेलिया देशं च अन्तरा प्रचाल्यमाणाया: तिसृणां विंशति-प्रतिविंशति-स्पर्धामालिकाया: ह्य: सिडनी क्रीडांगणे समायोजिता। द्वितीया स्पर्धा भारतेन षड् क्रीडकानां सुरक्षापूर्वकं विजिता। भारतेन पणकं विजित्य क्षेत्ररक्षणं चितम् ऑस्ट्रेलिया दलं च क्रीडनाय समाहूतम्। ऑस्ट्रेलिया दलेन भारताय नवत्यधिकैकशतं धावनांकानां लक्ष्यं उपस्थापितम्। ऑस्ट्रेलिया पक्षत: मैथ्यू वेड द्वात्रिंशत् कन्दुकेषु अष्टपञ्चाशत् धावनांकान् समार्जयत्। प्रत्युत्तरे भारतेन कन्दुकद्वयम् अवशिष्टे सति स्पर्धेयं षड्क्रीडकानां सुरक्षापूर्वकं लक्ष्यमिदं समधिगतम्। भारतीयं-दलं विजयेन साकं विंशति प्रतिविंशति स्पर्धाशृंखलामिमाम् अपि विजितवत्।

।। इति वार्ता: ।।